# कौहलीयशिक्षा

अथ शिक्षां प्रवक्ष्यामि कौहलीयमतानुगाम्
स्वरादिनिर्णयस्तत्र क्रियते तन्निबोधत १

उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा
इति चत्वारभागे हि स्वराः प्रोक्ता मनीषिभिः २

उच्चैरुच्चार्यते यस्तु स उदात्त उदाहृतः
आयामो दृढता सौक्ष्म्यं गात्रेऽङ्गेषु तथा गले
उच्चत्वकारकानेतानाहुः प्राज्ञा विशेषतः ३

नीचैरुच्चार्यते यस्तु सोऽनुदात्तोऽभिधीयते
प्रस्रता मृदुता स्थौल्यं गात्रादेः कारकं विदुः ४

नीचत्वे स्वरितः प्रोक्तस्तयोस्संधान इष्यते
तस्य तु स्वरितस्याद्यमर्धमुच्चैस्तरां विदुः
शेषस्यार्धस्य नीचत्वं किंचित्त्वाद् भृशमिष्यते ५

केचिदस्यादिमं भागमुदात्तसदृशं विदुः
अनुदात्तसमश्शेष एतावन्तो द्विधा स्मृताः ६

प्रचयः कथ्यते सद्भिरुदात्तसदृशश्रुतिः ७

स्वारास्सप्तविधा ज्ञेया वक्ष्यन्ते ते विशेषतः
नित्यः क्षैप्रोऽभिनिहतः प्रश्लिष्टः प्रातिहतस्तथा
पादवृत्तस्तथा तैरोव्यञ्जनस्वरितोऽपि च ८

अणुमात्रक इत्येके स्वरमन्यं प्रचक्षते
उदात्तादुत्तरो नीचस्संधाने स्वरितस्स्मृतः ९

स्वारोदात्तपरश्चेत् स्यात् तदा निहत इष्यते
स्वरितस्यास्य मन्यन्ते प्रज्ञानं प्राकृतस्त्विति १०

स्वरितादुत्तरो नीचस्संधौ प्रचय इष्यते
बहुत्वेऽथ तथा ते स्युस्स्वारोदात्तपरो न तु ११

इवर्णोकारयोस्संधौ यवभाव उदात्तयोः
तत्र यस्स्वर्यते स्वारः क्षैप्र एष उदाहृतः १२

अविकारस्त्वसावेव नित्य इत्यभिधीयते १३

ओकारो य उदात्तस्स्यादेकारश्च पदान्तगः
तयोर्यस्स्वरिते संधौ निहतेनोत्तरेण तु
एषोऽभिनिहताख्यस्तु स्वरः प्रोक्तो मनीषिभिः १४

एकादिष्ट उदात्तेन नित्यः प्रातिहताभिधः १५

द्वयोरुकारयोस्संधावुदात्तपरयोः क्रमात्
तत्र यस्स्वर्यते स्वारः प्रश्लिष्टस्सोऽभिधीयते १६

तृतीयो वा चतुर्थो वा भागो निहत उच्यते
पादवृत्ताभिधस्स्वारो विवृत्तौ यः पदस्य तु १७

कम्पेषु प्रथमस्स्वारो अणुमात्रिक इष्यते
त्रयाणामादितस्तेषु संनिपातो मिथो यदि
अपरः प्रथमस्यार्धं निहतं तु विधीयते १८

तृतीयो वा चतुर्थो वा भागो निहत इष्यते
प्रश्लिष्टस्य च संयोगस्तेषामन्यतमेन चेत् १९

स्वेच्छाप्रयोग इच्छन्ति कम्पं तत्रापि केचन

अदीर्घं दीर्घवत् कार्यं तत्र ह्रस्वस्य कर्षणात्  २०

अथ स्वायंभुवे काण्डे कम्पाः केचिदुदाहृताः
तत्रोदात्ताः प्रयोक्तव्या निहतांशस्तु पूर्ववत्  २१

वीर्यं बलमिति ह्यत्र ह्रस्वः कम्प उदीरितः
तन्वां स्वायामितीत्यादि दीर्घः कम्पो विधीयते  २२

ते अस्मदिति वाक्यांशे कैश्चित् कम्पो न पट्यते
लक्षणप्रतिकूलं तद् ब्रुवते केऽपि सूरयः  २३

ये पदं न हतं कस्मात् स्यादानर्थक्यमस्य तु
एवं बहुविधा दोषाः प्रदृश्यन्ते मनीषिभिः  २४

अविनीते तु पाठेऽस्मिन् व्यक्तयस्साधुरिष्यते
व्यक्तयो बहुला वेदे दृश्यन्ते स्वरवर्णयोः  २५

उच्यन्ते विक्रमास्तेऽपि विज्ञेयाष्षड्विधा बुधैः
उभयं स्वरितः कश्चिदुभयोदात्तकः परः
उदात्तपूर्वकः स्वारः पर एकस्तु विद्यते  २६

एकस्य विपरीतोऽन्यस्तथा प्रचयपूर्वकः
परोदात्तस्तथा स्वारपर एव निबोधत  २७

उभयोस्स्वारयोर्मध्ये निहतो यत्र दृश्यते
उच्यते विक्रमस्त्वेष उभयस्वरिताभिधः  २८

इतरे विक्रमा एवमूहनीया मनीषिभिः
प्रयत्नस्स्याद् दृढतरो विक्रमेष्वेषु संयतः  २९

उदात्तान्यनुदात्तानि बहुलानि प्रतान्यपि

निरन्तराणि दृश्यन्ते स्वरितस्य न संहतिः  ३०

उदात्तास्सहका यत्र दृश्यन्ते च निरन्तराः
उच्चादुच्चतरं तेषु क्रमात् तत्र विधीयते  ३१

समतावनुदात्तानां नीचान्नीचतरं विदुः
स्वरितस्य संनिपाते कम्पस्त्वभिहितः पुरा  ३२

प्रथमान् विक्रमान् बुद्ध्वा सम्यगुच्चारयेदृषिम्
यस्तु विप्रो विशेषेण श्रेयो नित्यमभीप्सति  ३३

नवप्रकारं विज्ञेयं पदानां स्वरलक्षणम्
अन्तोदात्तमथोदात्तमाद्युदात्तमुदात्तकम्  ३४

मध्योदात्तं ह्युदात्तं च निहतस्वरितं तथा
एकस्वरितमित्येताः पदशब्दनवस्मृताः  ३५

स्वरान् हस्तेन विम्यस्येद् विपश्चिद् दक्षिणेन तु
श्रेयो विपुलमन्विच्छन् न सव्येन कदा चन  ३६

तेन चेन्निष्फलं तस्य ब्रुवते ते विपश्चितः
अविदोषस्तथा कार्यस्तत एतद् विजानता  ३७

कनिष्ठिकानामिका च मध्यमा च प्रदेशिनी
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत्  ३८

विन्यस्य द्विस्वरं सौम्यं मध्यमे पर्वणि स्पृशेत्
इह कीर्त्तिमवाप्नोति प्रेत्य स्वर्गे महीयते  ३९

अतोऽन्यथा तु यो मर्त्यो निर्दिशेन्मतिमोहितः
स गच्छेन्नरकं घोरं पापयोनिषु जायते  ४०

स्वरविन्यासशीलस्तु हस्तेन वेदवित्तमः
यस्तस्य गुणदोषौ यौ तत्र तौ फलदौ स्फुटम् ४१

ईजानस्य यथा तेन दाक्षायणसवो मुखः
तस्मात् तत्रावधातव्यं श्रेयो विपुलमिच्छता ४२

अधीत्य विधिवत् पूर्वमृषिमाचार्यतश्शुभात्
अनन्तरं पदाध्यायः कर्तव्यो धीमता ध्रुवम् ४३

ततः क्रममधीयीत स्वरसंस्कारसंयुतम्
एवं त्ववधानस्य श्रेयो भवति नित्यदा ४४

यस्यां पदक्रमात्रेयो वृत्तिकारस्तु कर्णिनः
तां विद्वांसो महाशाखां भद्रमश्नुवते महत् ४५

क्रमो द्वाभ्यामनुक्रम्य प्रत्यादायोत्तरं तयोः
उत्तरेणैव संदध्यादर्धर्चान्तं समापयेत् ४६

यथालक्षणमव्यग्रं यथान्यायं समाचरेत्
तर्हि तावत् पदं पूर्वं तयोः पदवदुत्तरम् ४७

आवृत्तिरवसानस्य प्रग्रहस्य च नेष्यते
आत्रेयेण तथाप्यत्र सा तयोस्त्ववधीयते ४८

आकारान्तमुदात्तान्तमाङ्परं यत्र दृश्यते
त्रिक्रमं तं विजानीयान्मोषूण ऊषुणस्तथा ४९

त्रिक्रमे वक्ष्यमाणे तु प्रथमे त्रिपदक्रमः
मध्यान्ताभ्यां ततस्तेषु न विशेषस्ततः परम् ५०

समस्तानि पदानि स्युर्यानि प्राप्तानि तस्य तु

पुनस्सुवरकर्होतरन्तराविर्विवश्च कः
अजीगरिति रेफेण सहाज्यत्ता पदावलिः ५१

एवं क्रममधीयानस्सर्वदोषविवर्जितः
श्रेयः परमवाप्नोति दैवत्वमधिगच्छति ५२

य इच्छति जटां वक्तुं स विप्रो वेदवित्तमः
तस्य कीर्त्तिर्विवर्धेत स वेदफलमश्नुते ५३

पदद्वयमनुक्रम्य व्युत्क्रम्योत्क्रम्य संधिमत्
यथावत् स्वरसंयुक्तं प्रयुञ्ज्यात् सा जटा मता ५४

संहिता प्रकृतिः प्रोक्ता पदस्यैतत् क्रमस्य तु
जटायाः प्रकृतिस्त्वेष एवं नित्यं निबोधत ५५

जटायां वक्ष्यमाणायां कम्पसंधिस्वरादयः
अवधाय प्रयोक्तव्या निपुणं तदुदीरितम् ५६

प्रातिशाख्यादिशास्त्रज्ञस्सर्वशिक्षाविशारदः
बुद्धिशक्तिसमेतो यस्स जटां वक्तुमर्हति ५७

यदाधीतमपि ज्ञातं निगदेनैव शक्यते
अनश्नाविविशु ततो ज्वलति कस्यचित् ५८

तिस्रस्तु वृत्तयो वाचो द्रुतमध्यविलम्बिताः
प्रयोज्या नियतं वेद एवं प्रज्ञाः प्रचक्षते ५९

अन्यत्त्वं यदि वृत्तीनां कर्मणामत्र भिन्नता
वृत्तिं प्रति विशेषस्तु मात्रया भिद्यते ध्रुवम् ६०

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्

शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम्  ६१

वेदक्रमो द्रुतां वृत्तिं बुद्धिकामस्तु मध्यमाम्
कुर्वीत वेदविवृतिं स्वर्गकामो विलम्बिताम्  ६२

आसुरादिप्रमाद्यांश्चेद् दुर्गतिं विपरीतकः
यद्यन्यान्नियतं याति विद्यादेव ततो द्विजः  ६३

अत्रैवं मन्वते केचित् सर्वशास्त्रविशारदाः
मध्यमैव प्रयोक्तव्या निपुणं तदुदीरितम्  ६४

स्वराक्षरसमानानां वृत्तिवेदप्रवर्तिनाम्
मात्रायाः कथनं कर्तुं कैर ण्येन शक्यते  ६५

तस्माद् वृत्तिः प्रयोक्तव्या मध्यमा वेदवित्तमैः
एवं सुसंस्कृतं नित्यं प्रयुक्तं ब्रह्म राजते  ६६

क्रमविक्रमसंपन्नामद्रुतामविलम्बिताम्
नीचोच्चस्वारसंपन्नां वदेद् धृतवतीं समाम्  ६७

बहुशो मन्यते मात्रालक्षणं तन्मनीषिभिः
तेषु तेष्वेव कार्येषु प्रग्रह  ६८

एकद्वित्रिक्रमेणैव मात्राकालं मनीषिणः
शब्दैर्निदर्शयन्त्यत्र चाषकाककलापिनाम्  ६९

एवं बहुविधं मात्रालक्षणं ब्रुवते बुधाः
तत्र तत्र प्रबोद्धव्यमात्मनश्श्रेय इच्छता  ७०

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा
स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते  ७१

प्रणवाद्यास्सर्ववेदाः प्रणवोपरि च स्थिताः
प्रणवस्तु सदा कार्यो वेदारम्भे मनीषिभिः ७२

अध्यर्ध तयो योऽस्य तन्नादस्त्वेकमात्रिकः
त्रासुरर्धर्धं वा द्वयं तथा ७३

वेदस्थः प्रणवे तु स्यात् समकारो द्विमात्रिकः
स्वरमात्रं द्विमात्रं वा व्यञ्जनं त्वणुमात्रिकम् ७४

काण्डप्रश्नानुवाकानां समाप्तौ काल इष्यते
दशाष्टपञ्चमात्रास्स्युस्तन्त्राणां च त्र्यहं भवेत् ७५

विश्रमो न समासस्य
मध्ये तु पदवाक्ये वा अदृष्टार्थो निषिध्यते ७६

रेफस्य ऊष्मसंयोग एष याति स्वरात्मताम्
समानकरणरूपभाक् ७७

ऋकार आदिरणुमात्रो मध्ये रेफोऽर्धमात्रिकः
अणुमात्रस्तथान्त्यांशो मध्ये भक्तिर्विधीयते ७८

अनुस्वा संयोगादिर्यदि स्थितः
ओष्ट्यस्वरान्ते चाप्येवं निपुणं तन्निबोधत ७९

अ र्योर्विद्यते यव्य तद्वियां प्रय
शास्त्रमेतत्ततः सर्वमृषिरस्य प्रसीदति ८०

शिक्षामिमां तु योऽधीते वेदतत्त्वप्रकाशिकाम्
अतुलामश्नुते कीर्त्तिं परे ब्रह्मणि लीयते ८१

कौहलीयशिक्षा समाप्ता

श्रीरस्तु